TRIVANDRUM SANSKRIT SERIES.

NO. VI.

श्रीशरणदेवविरचिता

# दुर्घटवृत्तिः

# THE DURGHATAVRITTI OF SARAṆADEVA

Edited with Notes

BY

T. GAṆAPATI ŚÂSTRÎ

Curator of the Department for the publication of Sanskrit manuscripts,
TRIVANDRUM.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM:
PRINTED AT THE TRAVANCORE GOVERNMENT PRESS
1909.

---

TRIVANDRUM SANSKRIT SERIES.

NO. VI.

# THE DURGHATAVRITTI

OF

# SARAṆADEVA

Edited with Notes

BY

T. GAṆAPATI ŚÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1909.

॥ श्रीः ॥

अनन्तशयनसंस्कृतग्रन्थावलिः.

ग्रन्थाङ्कः ६.

श्रीशरणदेवविरचिता

# दुर्घटवृत्तिः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधिता

लघुटिप्पण्या च संयोजिता ।

सा च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशिता ।

कोळम्बाब्दाः १०८४, क्रैस्ताब्दाः १९०९.

# PREFACE.

This work, which is now published, is the Durghatavritti to which frequent references are found in the Sabdakaustubha and other grammatical treatises. The work has been so named, as it is an exposition (वृत्ति) reconciling those Lakshyas (forms of words) and Panini's Sutras which appear difficult to reconcile (दुर्घट) with each other.

When Vyâkarana treatises devoted chiefly to the consideration of the propriety of well-known usages of words have at present so far disappeared that only their names seem left to us, fortunately this single work of the kind has been obtained; and it has also been made known to the public now. Indeed, many other works of the same kind, this book cites as authority; *e.g.*, Suddhasubanta, Prasiddhapada, Suvarnarekha, Prayogamukhi, — the obtaining of which is highly to be desired. Learning by name from this Durghatavritti, not only works on Vyâkarana, but those of other subjectmatter too, many in number, and whose names even were not heard of before, surely no votary of Sanskrit will be without a longing to know more of them; nor will his thoughts remain without running to the gist of the learned saying,

"कति कवयः कति कृतयः
कति लुप्ताः कति चरन्ति कति शिथिलाः"

Later treatises follow for the most part several of the methods explained in the Durghatavritti for arriving at 'Lakshyas'. Objection has been raised in a few places against the opinions of the Durghatavritti in the Sabdakaustubha and other works. But by this, the excellence of the Durghatavritti, which is adorned with the variety of arguments learnedly set forth in it, does not suffer in the least, especially as even those adverse criticisms can be completely met by expert logicians.

It is plainly known from the first three slokas of this Durghatavritti that it was composed by Saranadeva in the year 1095 of the (Salivahana) Saka Era, corresponding to 1172 A. D., and revised by Sarvarakshita. From the repeated quotations from Budhistic literature, and also from the introductory prayer of the work being put in the form of a salutation to the Lord as Sarvajna, a synonym for Buddha, we may infer that the author Saranadeva was a devotee of Buddha. As the author speaks of the reviser of his work as "Sri-Sarvarakshita", with the epithet, Sri, prefixed to the name, it appears that Saranadeva had great veneration towards Sarvarakshita. Therefore Saranadeva was probably a disciple of Sarvarakshita, or stood nearly in that relation.

One manuscript of this work (क) was obtained from the Sanskrit Library of H. H. The Maharaja of Travancore. This is merely a transcript, made 20 years ago, of the Koopakara Matham manuscript. A second manuscript (ख) was kindly sent to me by Pandit Anantanârâyana Sâstri of Vadivisvaram village, son of the revered scholar, Svami-Dikshita. This manuscript, which appears to be more than 100 years old, is written in Tamil Grantha character on palm leaf; and some of the letters have disappeared in a few of the leaves. It is in accordance with these two manuscripts that I have prepared this edition of the Durghatavritti. But on account of errors in the manuscript, the depth of thought contained in the work, and the large number of references that had to be made to other books, I underwent great pains in examining and preparing the book for publication.

This Vritti, in which profound thoughts are expressed in terse language, certainly requires the assistance of an elaborate commentary. But I have appended only a few notes here and there, as far as my abilities went and the time at my disposal permitted.

T. Ganapati Sâstri.

# निवेदना।

इयं सा **दुर्घटवृत्तिः**, यस्याः **शब्दकौस्तुभा**[1]दिष्वसकृदनुसन्धानमुपलभ्यते। **दुर्घटानां**—लक्ष्येषु कृच्छ्रघटनीयानां पाणिनिसूत्राणां, **वृत्तिः**—लक्ष्यानुग्राहितया विवरणमिति व्युत्पत्त्यास्यास्तथा व्यपदेशः। लक्षणेषु कृच्छ्रघटनीयानां लक्ष्याणां लक्षणानुगततया विवरणमिति व्युत्पत्त्या वा स व्यपदेशः। प्रसिद्धप्रयोगोपपत्तिसमालोचनप्रधानेषु व्याकरणग्रन्थेष्वद्यत्वे नामशेषतामिव गतेषु एक एवैष ग्रन्थो दैवगत्योपलब्धः, नीतश्चेदानीं प्राकाश्यमस्माभिः। अन्यानपि तु **शुद्धसुबन्तं, प्रसिद्धपदं, सुवर्णरेखा, प्रयोगमुखी** इति बहून् ग्रन्थान् आशंसनीयोपलम्भान् एष प्रमाणयति। न केवलं व्याकरणानुबन्धिनः, किन्त्वन्यविषयानप्यश्रुतनामधेयान् बहून् ग्रन्थान् अस्याः सकाशान्नामतो विदन् संस्कृतभक्तो नाम कश्चिद् न खलु तेषु पर्युत्सुको न भवेत्;

'कति कवयः कति कृतयः कति लुप्ताः कति चरन्ति कति शिथिलाः'

इत्यभियुक्तोक्तिं च न खलु नानुसन्दधीत।

**दुर्घटवृत्ता**वुल्लिखितांस्तांस्तान् लक्ष्यसिद्ध्युपायान् भूयिष्ठमर्वाचीनग्रन्था अनुसरन्ति। क्वचित् क्वचिद् दुर्घटवृत्त्यभिप्रायं प्रति **शब्दकौस्तुभा**[2]दिषु दूषणमुद्भाव्यते। न तु तावता **दुर्घटवृत्ते**रुच्चावचोपपत्तिवचनचातुरीचित्रिताया ईषदपि महिमा हीयते, यतस्तर्ककुशलैस्तदपि दूषणं शक्यमेवोद्धर्तुम्[3]।

इयं **दुर्घटवृत्तिः श्रीशरणदेवेन** १०९५तमे शाकमहीपतिवत्सरे (अर्थाच्छालिवाहनशकाब्दे) ११७२तमक्रैस्तववर्षसमे प्रणीता **श्रीसर्वरक्षितेन** संस्कृता चेति ग्रन्थादिमश्लोकैरवगम्यते। **शरणदेवश्च** बौद्धग्रन्थप्रयोगाणामसकृत् स्मरणाद् **बुद्धा**परपर्याय**सर्वज्ञ**नतिरूपमङ्गलाचरणाच्च बुद्धभक्त इति प्रतीयते। 'श्रीसर्वरक्षित' इति श्रीशब्दप्रयोगाद् **शरणदेवस्य सर्वरक्षितं** प्रतिसंस्कर्तारं प्रति बहुमानविशेषो गम्यते। तेन **शरणदेवः श्रीसर्वरक्षितस्य** शिष्यः शिष्यकल्पो वा सम्भाव्यते।

तस्यैतस्य ग्रन्थस्यैक आदर्शः **श्रीवञ्चिमण्डलमहाराजसंस्कृतग्रन्थशालाया** उपलब्धः **क**.संज्ञः, यः **कूपतटमठीया**दादर्शाद् वर्षविंशतेः प्राक् प्रतिरूपितः। अपरश्च

---

१. 'क्ङिति च' इत्यादिकानि सूत्राणि दृश्यन्ताम्. २. **शब्दकौस्तुभे** 'कर्मणि द्वितीया' 'कर्तृकर्मणोः कृति' इत्यादीनि सूत्राणि दृश्यन्ताम. ३. 'गाङ्कुटादिभ्योऽञ्णिद् ङित्' इत्यादिसूत्राणि दृश्यन्ताम्.

विद्वद्वतंसश्रीस्वामिदीक्षितसूनुना **वटिवीश्वर**ग्रामाभिजनेन पण्डित-**अनन्तनारायण-शास्त्रि**महाशयेन सकृपं मह्यं प्रहितः **ख.**संज्ञः । एष शताधिकवर्षदेशीयो द्रमिलग्रन्थ-लिपिस्तालपत्रात्मकः कतिपयेषु पत्रेषु लुप्ताक्षरश्च । एतदादर्शद्वयानुरोधेन **दुर्घटवृत्तेः** संशोधनं मया निरवर्त्ति । किन्त्वादर्शाशुद्ध्या ग्रन्थगाम्भीर्येण अनुसन्धेयग्रन्थान्तरवस्तु-भूम्ना च संशोधने महान्तं क्लेशमन्वभूवम् ।

मितगम्भीरभाषिणीमेनां वृत्तिं प्रति प्रतिपदावगाहिन्या व्याख्ययावश्यमाचरं-णीयं कयाचित् साचिव्यम् । अहं पुनर्यथामति यथावसरं च टिप्पणीमेव लघ्वीं कामपि तत्र तत्र समयोजयम् ॥

अनन्तशयनम्.
१९०९ .६. २४.

**त. गणपतिशास्त्री.**

# दुर्घटवृत्तौ स्मृता ग्रन्थाः ।

## दुर्घटवृत्तौ स्मृता ग्रन्थकाराः ।

---

## दुर्घटवृत्तौ व्याख्यातानां सूत्राणां सूचनिका ।

# दुर्घटवृत्तेरुदाहरणानुक्रमणी ।

---

॥ श्रीः ॥

श्रीशरणदेवकृता

# दुर्घटवृत्तिः ।

## प्रथमाध्याये प्रथमः पादः ।

नत्वा शरणदेवेन सर्वज्ञं ज्ञानहेतवे[1] ।
बृहद्रद्दजनाम्भोजकोशवीकासभास्वते ॥
शाकमहीपतिवत्सरमाने ऐकनभोनवपञ्चविताने[2] ।
दुर्घटवृत्तिरकारि मुदे वः कण्ठविभूषणहारलतेव ॥
वाक्याच्छरणदेवस्य च्छात्रावग्रहपीडया ।
श्रीसर्वरक्षितेनैषा संक्षिप्य प्रतिसंस्कृता ॥

### क्ङिति च । ५ ।

कथं 'दु हरेश्छन्दसि' (७-२-३१) इति हृधातोरीकि गुणनिषेधादुच्चारणार्थेकारेणानङ्गत्वाद् गुणाभावात् । उच्यते । अत एव निर्देशादिति रक्षितः । श्नन्तस्यैकदेशस्योच्चारणार्थेकारेण वा निर्देशः । कथं नित्यं तुन्दपरिमृजः, 'तुन्दशोकयोः परिमृजापनुदोः' (३-२-५) इति कप्रत्यये 'मृजेरजादौ[3] सङ्क्रमे विभाषा वृद्धिरिष्यते' इति वृद्धिप्रसङ्गात् । उच्यते । व्यवस्थितविभाषया न वृद्धिः । अचीति[4] वाच्येऽजादिग्रहणं मुख्याजादिपरिग्रहार्थम् । तेन तुन्दपरिमृज इति । (तत्रेदं?) 'यस्मिन् विधिस्तदादौ' इत्यादिना आद्यर्थे सिद्धे आदिग्रहणाद् 'द्विर्बद्धः सुबद्धो भवती'ति अजादिरेव[5] ग्राह्यः । कप्रत्ययेऽनुबन्धसत्त्वे नाजादित्वम् । मार्जे-

१. ज्ञानरूपाय फलायेत्यर्थः. २. एकनभोनवपञ्चानां वितानो विन्यासः १०९५ इत्येवंरूपो यस्मिंस्तस्मिन्. ३. अस्यैवार्थतोऽनुवादः 'क्ङित्यजादौ वेष्यते' इति वा, 'क्ङित्यचि वा' इति वा. ४. समाधानान्तरमाह—अचीतीति. ५. अजादिरेवेति यः सर्वदैवाजादिर्न तु कदाचिदजादिः, स इत्यर्थः. तेन गौणाजादेरव्यावर्तनाद् 'यूयं ममृज' इत्यादावपि वृद्धिविकल्पसिद्धिरस्मिन् समाधाने.

न्तीत्यत्र त्वादेशस्याजादित्वमेव । एकमुनिपक्षे तु 'अचो ञ्णिति' (७-२-११५) इत्यत्राच इति योगं विभज्य मृजेर्वृद्धिः; 'जराया जरसन्यतरस्याम्' (७-२-१०१) इत्यस्मादन्यतरस्यांग्रहणानुवृत्तेर्व्यवस्थिताविभाषात्रोक्ता । राक्षितेन च धातुप्रदीपे तुन्दपरिमृजस्तुन्दपरिमार्ज इत्युभयं दर्शितम् । भाष्ये तु व्यवस्थितविभाषाया अनुदाहृतत्वादुभयप्रयोगो लक्ष्यते । कथं जिष्णुः 'ग्लाजिस्थश्च क्स्नुः' (३-२-१३९) इत्यत्र स्थास्नुरिति सिद्धये गित्वायं न किदिति व्याख्यातम् । उच्यते । गकारप्रश्लेषादत्र सूत्र इति वृत्तिः । तदुक्तम्—

'स्नोर्गित्वान्न स्थ ईकारः किद्ङितोरीत्वशासनात् ।
गुणाभावास्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः ॥'

अन्ये तु स्थास्नुसिद्धये स्था आ इत्याकारप्रश्लेषाद् 'घुमास्थागे'ति (६-४-६६) नेत्वमिति च वर्णयन्तः क्त्वाद् गुणाभावमाहुः । किन्त्वेवं 'दंशेश्छन्दस्युपसङ्ख्यानम्' इति 'दङ्क्ष्णवः पशवः' इति न सिध्यति । अनुनासिकलोपप्रसङ्गात् । उच्यते । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्यदोषः ॥

## तुल्यास्यप्रयत्नं सवर्णम् । ९ ।

कथं प्रक्लृप्यमानः 'ऋकारलृकारयोः सवर्णसंज्ञा वक्तव्या' इति 'ऋवर्णाच्च' इति णत्वप्रसङ्गात् । उच्यते । उरिति वक्तव्ये वर्णग्रहणमस्यानित्यत्वार्थम्[1]। तेन । यद्वा 'ऋलृक्' इत्यत्र प्रत्याहारे लृग्रहणं शक्यमकर्तुम् । यथा सावर्ण्यादृकार ॠकारं गृह्णाति, तथा लृकारमपि ग्राहयिष्यति किं लृकारेण । तज्ज्ञापयति ऋकारलृकारयोः सावर्ण्यमनित्यमिति । तेन यथा क्लृप्तशिख! इति 'गुरोरनृतः' (८-२-८६) इति प्लुतो भवति, न त्वनृत इति प्रतिषेधः, तथा प्रक्लृप्यमान इति णत्वाभावः[3] ॥

## ओत् । १५ ।

कथमगौर्गौः समपद्यतेति गोभवेदिति, च्व्यन्तत्वान्निपातत्वेन प्रगृह्यत्वात् पूर्वरूपत्वाभावात् । उच्यते । च्व्यन्तेऽध्यारोपितगोत्वाद् गौणत्वम् । 'गौणमु-

---

१. वचनसाध्यस्यार्थस्य सूत्रत एव साधनपक्षे. २. णत्वस्य. ३. क्लृप्यमान इत्यत्रेवेति शेषः. एवञ्चात्र 'कृत्यचः' (८-४-२९) इति णत्वप्रसङ्ग एव क्षुभ्नादित्वकल्पनया वारणीय इति भावः.

त्व्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति यथा 'गौरनुबन्ध्योऽजोऽग्नीषोमीयः' इत्यत्र न बाहीकोऽनुबध्यते । एवञ्च गौर्बाहीको गां बाहीकमिति वृद्ध्यात्वे न स्याताम् । उच्यते । पदसंस्कारपक्षे बाहीकाद्यर्थानपेक्षया वृद्ध्यात्वे भविष्यत इति भाष्यभागवृत्ती ॥

## न बहुव्रीहौ । २९ ।

**कथं** त्वकत्पितृको मकत्पितृक इति । बहुव्रीहौ सर्वनामत्वाभावादकचोऽप्रवृत्तिः । **उच्यते** । गोनर्दीयमतेनान्तरङ्ग एवाकच् । यथाह — 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' इति । प्रत्यङ्गावन्तरङ्गावित्यनुन्यासकारः । धातुवृत्तावुक्तम् — त्वत्कपितृको मत्कपितृक इति बहुव्रीह्यर्थे वृत्तत्वात् समानकाल एव निषेधादकचोऽप्रवृत्तिः । प्रागिवात् क एव भवति । तथा च भाष्यम् — 'विधिनिषेधौ च समानकालौ' इति ॥

## विभाषा जसि । ३२ ।

**कथं** 'व्यथां द्वयेषामपि मेदिनीभृताम्' इति माघः । द्वयशब्दस्य जस्येव सर्वनामताविकल्पात् । **उच्यते** । व्यवस्थितविभाषयान्यत्रापीष्यते । अथवा इष गतावित्यतः क्विपि । द्वयं द्वैधं गच्छन्तीति द्वयेषः तेषाम् । सर्वादावुभयशब्दः पठ्यते । तस्यार्थग्रहणाद् द्वयशब्दस्यापि सर्वादित्वमित्यन्यः ॥

## अचः परस्मिन् पूर्वविधौ । ५७ ।

**कथं** वैयाकरणः 'न य्वाभ्याम्' (७-३-३) इत्यैचि कर्तव्ये यणः स्थानिवत्त्वाद्यकारपूर्वाभावादैज् न स्यात् । **उच्यते** । यो ह्यनादिष्टादचः पूर्वः, तस्य विधिं प्रति स्थानिवत्त्वमिति न स्थानिवत्त्वम् । 'असिद्धपरिभाषयान्तरङ्गे आयादेशे कर्तव्ये बहिरङ्गस्यैचोऽसिद्धत्वाद्' इति न्यासः । **कथं** भवतीति निमि-

---

१. च्व्यन्ता हि स्वभावाद् गौणार्थवृत्तय एवेति तदतिरिक्तानामेवौदन्तानिपातानां प्रगृह्यत्वमेतत्परिभाषाबलाद्विज्ञायत इति भावः. २. गोनर्दीयो भाष्यकारः. ३. **बहुव्रीह्यर्थे वृत्तत्वादिति** सूत्रे बहुव्रीहिशब्दस्य तादर्थ्यलक्षणया बहुव्रीह्यर्थपदपरत्वादित्यर्थः. ४. **समानकाले** विधिसमानकाले. अयं भावः — कृते बहुव्रीहाववयवस्योपसर्जनत्वेनासर्वादित्वादेव विधेरप्रसक्तः इति प्राग् बहुव्रीहेः प्रक्रियावाक्यदशायां यः प्रसङ्गः, तद्विषय एव निषेधोऽयं सामर्थ्याद्विज्ञायते इति. ५. तेनैजागमस्यायादेशाभावोऽपि सिद्धः. निमित्तापेक्षपूर्वत्वाश्रयणपक्षपाते त्वाह — असिद्धेत्यादि.

त्तापेक्षपूर्वत्वे ओकारस्य स्थानिवत्त्वादवादेशाप्रसङ्गाद्, यथा तन्वन्तीत्यत्रेडभावः। उच्यते। निमित्तापेक्षं पूर्वं लक्ष्यवशात् क्वचिदेव। तन्वन्तीत्रादिवत्परिभाषया वेडभावः॥

## द्विर्वचनेऽचि।५९।

कथमधिजगे। इङादेशस्य स्थानिवद्भावादिकारस्य द्विर्वचनप्रसङ्गात्। उच्यते। 'गाङ् लिटि' (२-४-४९) इत्यत्र लिण्मात्राश्रयत्वादन्तरङ्गत्वात् प्राक् प्रवर्त्तते। एशादेशस्तु लिडादेशविशेषाश्रय इत्युभयाश्रयो बहिरङ्गः। एवं च द्विर्वचननिमित्तेऽचि नायमजादेश इति कुतः स्थानिवत्त्वमिति न्यासः। कथं निन्यतुः, प्रागियङि द्वित्वे हि निनियतुरिति स्यात्। उच्यते। 'उपजातनिमित्तोऽप्युत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बाध्यते' इति यणा बाधितत्वान्नेयङ्। भाष्यभागवृत्त्योस्त्वेतदर्थं नाश्रित्यमनुवृत्तौ द्विर्वचननिमित्तेऽचि द्विर्वचन एव कर्तव्येऽप्यजादेशो न भवति। कृते द्विर्वचने यथास्वम् इयङादेशौ भवतीति सूत्रार्थः॥

## अदर्शनं लोपः।६०।

कथं वृक्षः प्लक्षः। विसर्जनीये रेफस्यादर्शनाल्लोपसंज्ञायां 'ढ्रलोपे पूर्वस्य' (६-३-१११) इति दीर्घसम्भवात्। न च लोपभावितस्य संज्ञा, 'चादिलोपे' (८-१-६३) इत्यत्र चार्थो गम्यते, न चादिशब्दः प्रयुज्यते, स चादिलोप इत्युक्तम्; तथा 'ल्यब्लोपे कर्मण्युपसङ्ख्यानम्' इति च गम्यमाने ल्यपि लोपशब्दः प्रयुक्तः। उच्यते। सामर्थ्यादौपचारिको गौणोऽत्र लोपः। अथवा ढ्रयोर्लोपो यस्मिन्निति बहुव्रीहिः कार्यः। अवसानस्याभावरूपत्वान्न परत्वम्। एवमपि वृक्षस्तिष्ठतीत्यत्र प्रसङ्गः। किञ्चावसानस्यापि बुद्धिकल्पितं परत्वमस्त्येव। वर्णानां परत्वं बाध्य-

१. तथाच निमित्तापेक्षपूर्वत्वाश्रयणपक्षस्त्यक्तव्य इति भावः. २. एतच द्विलकारनिर्देशेन लिटो लकारादित्वलाभात्. ३. गाङादेश इति शेषः. ४. येयं द्वित्वात् प्रागजादेशाप्रवृत्तिरुपसञ्जातपरिभाषया साधिता, सा सूत्राक्षरैरेव सिद्धेति वक्तुमाह— भाष्येत्यादि. ५. 'इयङादेशौ भवन्ति' इति पठितुं युक्तम्. ६. अत्रेति 'चादिलोपे' इत्यादौ. 'ढ्रलोपे' इत्यत्र तु 'रो रि' इति लोपशब्दभावितो मुख्य एव लोपः सम्भवतीति नातद्भावितो गृह्यते इत्याशयः. ७. रेफादर्शननिमित्तस्य स्वरः परत्वादित्यर्थः. विसर्गव्यवधानान्न भविष्यतीति चेन्न, परत्वस्य व्यवहिताव्यवहितसाधारण्यस्य प्रतिपत्तेः. तद्धि पूर्वस्येत्यनेनाक्षिप्तम्; न चात्र तस्मिन्निति परिभाषा उपस्थानम्. ८. बुद्धिपरिकल्पितमेव परत्वं मत्वभावात् सर्वत्राभ्युपगमनीयमित्याह— वर्णानामित्यादि.

मेवोच्चरितप्रध्वंसित्वात् । एवं तर्हि ढलोपसाहचर्याद् 'रो रि' (८-३-१४) इति रेफलोपो ग्राह्यः । वृक्षस्तिष्ठतीत्यत्र 'तस्मिन्निति' (१-१-६६) परिभाषया विसर्जनीयव्यवधानादपि दीर्घाभावात् ॥

## प्रत्ययलोपे प्रत्ययलक्षणम् ।६ २ ।

कथं भवतीति, क्विपोऽदर्शने लोपसंज्ञायाः प्रत्ययलक्षणे सतीवर्णस्य तुक्प्रसङ्गात् । न च लोपश्रुत्या विहितस्य प्रत्ययलक्षणं, यत 'आयादय आर्धधातुके' (३-१-३१) इत्यत्र न्यास उक्तम्—'आयादीनां पक्षे निवृत्तिः प्रवृत्तिर्वा । तत्र यदि वाग्रहणेनायादीनां निवृत्तिः स्यात्, तदा प्रत्ययलक्षणेन अ प्रत्ययाद् (३-३-१०२)इत्यकारः स्याद्' इति । उच्यते । तथा अदर्शनसूत्रे (१-१-६०) त्रपुजतुभ्यां स्वमोर्लुकि कृते क्विपो लोपस्य प्रत्ययलक्षणेन तुकमाशङ्क्य न्यासकृता स्थानिवत्सूत्रात् स्थानिवद्ग्रहणमनुवर्त्य स्थानी प्रसङ्गवान् इति प्रसक्तस्यादर्शने प्रत्ययलक्षणमुक्त्वा धात्वाधिकारात् क्विपोऽप्रसङ्गेन तुगभाव उक्तः । ननु यदि प्रत्ययप्रसङ्गे प्रत्ययलक्षणं, तदा ग्रामणीरित्यत्राणः[3] प्रसङ्गे 'सत्सूद्विष' (३-२-६१) इत्यादिना क्विपि प्रसक्तस्याणः प्रत्ययलक्षणेन वृद्धिः स्यात् । उच्यते । 'पूर्वमपवादाः प्रवर्तन्ते पश्चादुत्सर्गा' इत्यणः प्रसङ्ग एव नास्ति । कथं गोहितम् । प्रत्ययलक्षणेन चतुर्थ्येकवचनाश्रयावादेशात् । उच्यते । 'प्रत्ययलोपे तल्लक्षणम्' इति वक्तव्ये प्रत्ययग्रहणेन ज्ञापितं वर्णाश्रयविधौ प्रत्ययलक्षणं नास्तीति । तेन गवे हितं गोहितमिति नावादेशः । यद्येवं कथमतृणेडिति लोपे हलि विधीयमानः 'तृणह इम्' (७-३-९२) इतीम् । उच्यते । स हि हलादौ सार्वधातुके, न तु वर्णमात्रे । एवं हि मोदत इति मुदित्यत्र क्विपि वलाद्याश्रय इट् स्यात् । उच्यते । 'शास इदङ्हलोः' (६-४-३४) इत्यत्र न्यास उक्तम्— परिभाषेयमनित्येति ॥

१. पूर्वस्येति तु इहोत्तरपदाधिकारादनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम्, न पुनः परिभाषाबाधार्थम्. २. वृक्ष इत्यत्र तु निर्दिष्टग्रहणेन परिभाषायाः सप्तमीनिर्दिष्टशब्दविषयतावसायाद् रुलोपे शब्द एव परतो दीर्घ इत्यवसानस्याशब्दत्वादेव दीर्घाभावः सिद्ध इत्याकूतम्. ३. प्रसङ्गश्च सामान्यशास्त्रतः. ४. प्रत्ययग्रहणेन वर्णविशेषणतापन्नप्रत्ययासाधारणरूपाश्रयस्यैव कार्यस्य तत्प्रत्ययलोपेऽपि प्रवृत्तिबोधनादर्थाद् व्यावर्त्यमानमतादृशं कार्यं वर्णप्राधान्यनिबन्धनमेव भवितुमर्हतीति कथमिमः प्रत्ययविशेषणीभूतवर्णाश्रयस्याप्रवृत्तिशङ्केत्यभिसन्धिमानाह — स हि हलादौ इत्यादि. वर्णमात्रे केवले वर्णे इत्यर्थः. कैवल्यमेतराविशेषणत्वं प्राधान्यमिति यावत्.

## न लुमताङ्गस्य । ६३ ।

**कथम्**—

'अभिमुखमुपयाति मास्म किञ्चित् त्वमभिदधाः पटले मधुव्रतानाम् ।
मधुसुरभिमुखाब्जगन्धलुब्धैरधिकमधित्वदनेन मा निपाति ॥'

इति माघः । त्वय्यधीत्यव्ययीभावे स्वादेर्लुकि त्वादेशाभावात् । **उच्यते** । **'इकोऽचि विभक्तौ'** (७-१-७३) इत्यत्राज्ग्रहणेनास्या[1]नित्यत्वज्ञापनात् प्रत्ययलक्षणेन त्वादेशात् । त्वदिति विभक्तिप्रतिरूपमव्ययं त्वय्यर्थ इति वा । यौ तु सर्वादौ त्व त्वदिति पठ्येते, तावन्यार्थौ ॥

इति शरवणदेवविरचितदुर्घटवृत्तौ

**प्रथमाध्याये प्रथमः पादः ।**

---

### अथ द्वितीयः पादः ।

## गाङ्कुटादिभ्योऽञ्णिन्ङित् । १ ।

**कथं** धवित्रं व्यजनम् । 'अर्त्तिलूधू' इत्यादिना इत्रचि 'धू विधूनन' इत्यस्य कुटादित्वाद् गुणाभावात् । **उच्यते** । 'ओरोद्' इति वक्तव्ये' ओर्गुणः' (६-४-१४६) इति गुणग्रहणेन ज्ञापितः संज्ञापूर्वको विधिरनित्यः । तथा कुटस्यादि[2]: कुटादिरित्येकशेषेणान्तर्भावाल्लिखेः [3]कुटादित्वम् । **कथं** तर्हि (मधुप्रसूर्लेखनीति[4]) **'अपाच्चतुष्पाच्छकुनिष्वालेखन'** (६-१-१४२) इति निर्देशात्, रद विलेखन इति निर्देशाच्च । 'व्यचेः कुटादित्वमनसि' इति वक्तव्यम् । **कथं** विव्यचिथेति, सम्प्रसारणप्रसङ्गात् । **उच्यते** । अनसीति प[5]र्युदासात् तिङो ङित्वाभावादिति धातुपारायणे । धातुवृत्तौ तु सम्प्रसारणमाश्रित्य विविचिथेत्युक्तमिति राक्षितः ॥

---

१. **अनित्यत्वेति.** नित्यत्वे ह्यनेन प्रत्ययलक्षणप्रतिषेधाद्विभक्त्यभावादेव नुम् न भविष्यतीति किं तद्वारणार्थेनाज्ग्रहणेन. २. एकशेषश्च तत्पुरुषबहुव्रीह्योः. ३. **कुटादित्वमिति** तच्च लिखितुं लिखिष्यत इति प्रयोगनिर्वाहाय. ४. उक्तनिर्देशान्यथानुपपत्त्यैव लिखेः कुटादित्वममन्यमानः संज्ञापूर्वकविध्यनित्यतया लिखितुमित्यत्र गुणाभावं वदति हरदत्तः; धवित्रमिति च कल्पसूत्रप्रयोगश्छान्दसत्वादुपपादनीय इत्याह. ५. **पर्युदासादिति** पर्युदस्यमानाज्सदृशोऽर्थात् कृत्प्रत्यये कार्यविज्ञानादित्यर्थः-

## विज इट् । २ ।

**कथम्** 'उद्वेजिता वृष्टिभिराश्रयन्तीं' इति कुमारसम्भवः । **उच्यते** । ण्यन्तादिति भागवृत्तिः । 'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्' इति चेत्, न [1] ह्यन्यविषयोऽयं 'न भाभूपूकामिगमि' (८-४-३४) इत्यादौ ण्यन्तानां च भादीनामुपसङ्ख्यानम्' इति वचनात् । णि[2]च्यन्तरङ्गत्वात् पूर्वं प्रत्ययाद् गुण इति वा ॥

## असंयोगाल्लिट् कित् । ५ ।

**कथं** 'न सम्पपृच्छे गमनाय सत्वरा' इति घोषः । संयोगान्तत्वात् कित्त्वाभावात् । **उच्यते** । अपशब्द एवायम् । अथवा 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (३-३-९०) इति नङो ङि[3]त्त्वेनागमशासनानित्यत्वात् तुकोऽभावे कित्त्वात् सम्प्रसारणे कृते ऋकाराश्रयस्तुक् ॥

## इन्धिभवतिभ्यां च । ६ ।

**कथमस्तेर्भूभावे बभूवेति, भवतीति** [4]**श्तिपा निर्देशात्** । **उच्यते** । नित्यशब्दान्वाख्याने 'अस्तेर्भूः' (२-४-५२) इत्यनेनास्तेः प्रसङ्गे [5]भवतेः प्रयोगः साध्यते । [6]अथवा 'भवतेर' (७-४-७३)इत्यत्र यदुक्तमनुन्यासकृता 'अवश्यं हि यया कयाचिद् व्यक्त्या निर्देशः कर्तव्य इति भूव्यक्त्या निर्देशः कृतः; कोऽत्र प्रद्वेषः कृतः ॥

## हलन्ताच्च । १० ।

**कथं** दिदृक्षते सिसृक्षते । कित्त्वात् [7]परत्वात् 'सृजिदृशोर्झल्यमकिति' (६-१-५८) इत्यम् स्यात् । **उच्यते** । पूर्वविप्रतिषेधात् कित्त्वम् ॥

---

१. **न ह्यन्येत्यादि.** 'हेरचङि' (७-३-५६) इत्यचङ्ग्रहणेन चङोऽन्यत्र सनादौ हेर्ण्यधिकस्यापि कुत्वं भवतीत्येव ज्ञापनाद् 'ण्यन्तानाञ्च भादीनाम्' इत्युपसङ्ख्यानानुगुण्याच्च नायं न्यायो हिधात्वतिरिक्तविषय इत्यर्थः. २. न्यायस्य व्यापकत्वाभिमानेऽप्याह—**णिचीत्यादि. पूर्वं प्रत्ययात्** क्तप्रत्ययोत्पत्तेः प्राक्. ३. ङित्त्वं हि विच्छौ तुकीकारस्यानुपधात्वेन गुणाप्रसङ्गात् प्रच्छौ च 'प्रश्ने च' (३-२-११७) इति निपातनेन सम्प्रसारणानिष्टेर्व्यर्थं सत् तुगागमाप्रवृत्तिं वा शादेशविधौ सतुक्कच्छकारस्य स्थानित्वेन परिग्रहं वा ज्ञापयित्वैव सार्थकं वक्तव्यम्. ४. **श्तिपा निर्देशादिति.** तेन हि 'भू सत्तायामि'ति पठितस्य ग्रहणेऽपि 'अस भुवि' इत्यस्य ग्रहणं न प्राप्नोति. ५. **भवतेः प्रयोगः साध्यते** इति. भवतिश्च सिद्ध एव. न त्वस्तेर्भूरूपमपूर्वं सृज्यते. तथा चास्तेरग्रहणेऽपि दोषाभावः. ६. कार्यशब्दवादे विकृताविकृतव्यक्तिद्वययोगिनोऽस्तेः सम्बन्धिनी 'भू' इत्येवंरूपा विकृतव्यक्तिरप्येकशेषेण भवतिनिर्देशेऽन्तर्भाव्यत इत्याशयादाह—**अथवेत्यादि.** ७. **परत्वादिति.** अपरनिमित्तकत्वेऽपि समानशब्दापेक्षत्वात् कित्त्वस्य नान्तरङ्गतेति मन्यते.

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः । १९ ।

**कथम्** उड्डयितं डीङोऽत्रापाठादकित्त्वाभावात् । **उच्यते** । '**भौवादिकस्य डीङो** निष्ठायामकित्त्वम्' इति धातुपारायणः । दैवादिकस्य डीङ ओदितां मध्ये पाठसामर्थ्यादनिट्त्वं नत्वं च । तेनोड्डीन इति ॥

## रलो व्युपधाद्धलादेः संश्च । २६ ।

**कथं** नित्यं कुटित्वा । परत्वादनेनैव विकल्पिताकित्त्वात्[1] । **उच्यते** । पूर्वविप्रतिषेधेनान्तरङ्गत्वाच्च[2] कुटादित्वमात्रम् ॥

## ह्रस्वो नपुंसके प्रातिपदिकस्य । ४७ ।

**कथं** वनाय वनेभ्य इति दीर्घत्वैत्वयोः कृतयोर्ह्रस्वत्वप्रसङ्गात् । **उच्यते** । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति ह्रस्वे कर्तव्ये दीर्घत्वादेरसिद्धत्वाद्[3] । [4]अथार्थधर्मस्य नपुंसकलिङ्गस्याश्रयणाद्ध्रस्वोऽपि बहिरङ्गः । **एवं तर्हि** परस्मैपदेष्विति निर्देशान्न ह्रस्वः । **वने** इति द्विवचनान्तस्य सप्तम्यन्तस्य च पूर्वं प्रत्यन्तवत्त्वेन ह्रस्वत्वम् । **उच्यते** । [5]उक्तकर्मादिशक्तिकत्वेनानपुंसकत्वात्, [6]प्रथमाद्विवचनस्य तु 'अर्थवदधातुः' (१-२-४५) इत्यतः प्रातिपदिकग्रहणानुवृत्तौ पुनः प्रातिपदिकग्रहणान्निष्कृष्टप्रातिपदिकाश्रयणात् । अपरं बहुत्वान्नोक्तम् ॥

## गोस्त्रियोरुपसर्जनस्य । ४८ ।

**कथं** अर्धपिप्पलीति, 'एकविभक्ति च' (१-२-४४) इत्युपसर्जने ह्रस्वत्वप्रसङ्गात् । **उच्यते** । 'एकविभक्तावषष्ठ्यन्तवचनम्' इति कात्यायनवार्तिकेनोपसर्जननिषेधादिति भाष्यम् । 'एकविभक्तिचे'त्यत्र वि[7]भाषानुवृत्तेर्व्यवस्थितविभाषा-

१. तथाच कुटादित्वप्रयुक्तनित्यङित्वस्य बाधात् कोटित्वेत्यपि पक्षे भाव्यमित्यर्थः. २. अन्तरङ्गत्वमल्पापेक्षत्वात्. ३. दीर्घत्वादेर्बहिरङ्गता च सुपोऽधिकस्यापेक्षणात्. ४. सुबपेक्षायाः स्थाने लिङ्गापेक्षायाः सत्त्वान्नान्तरङ्गो ह्रस्व इत्याक्षिपति — **अथेत्यादि**. ५. **उक्तेत्यादि**. अन्तवत्त्वेन प्रातिपदिकत्वेऽपि विभक्त्यन्तस्य कर्माधिकरणशक्तिप्रधानत्वेन नपुंसकलिङ्गयुक्तद्रव्यवृत्तित्वाभावादित्यर्थः. ६. प्रथमान्तं शक्तिप्रधानत्वविरहेण नपुंसकद्रव्यवृत्ति भवत्येवेति तत्र पृथक् परिहारमाह — **प्रथमेत्यादि**. **प्रातिपदिकग्रहणानुवृत्ताविति**. नपुंसकद्रव्यवाचित्वस्य धात्वादिष्वभावादर्थात् प्रातिपदिकलाभ इति कैयटः. **निष्कृष्टेति** मुख्येत्यर्थः. तेनातिदिष्टप्रातिपदिकव्यावृत्तिः. एष एव तु परिहारो द्वितीयान्तसप्तम्यन्तयोरपि द्रष्टव्यः, यत्कारणं नपुंसकवृत्तेरनपुंसकवृत्तेश्चैकादेशो नपुंसकवृत्तिग्रहणेन गृह्यत एवेत्ययुक्तः प्राक्तनः परिहारः. ७. **अनुवृत्तेरिति**. सा च 'विभाषा छन्दसि' (१-२-३६) इत्यतः.

त्वाद्'' इति न्यासः । 'उभयगतिरिह शास्त्रे सम्भवतीति लौकिकोपसर्जनत्वान्न ह्रस्वः शास्त्रीयोपसर्जनस्य, लौकिकोपसर्जननिवृत्त्यर्थे यत्नसामर्थ्यात्[1] । ह्रस्वे वा परवल्लिङ्गतया स्त्रीप्रत्ययः प्रत्युज्जीव्यत'[2] इत्यनुन्यासः ॥

## अस्मदो द्वयोश्च । ५९ ।

'सविशेषणानां प्रतिषेधो वक्तव्यः' इत्युक्तम् । **कथं** पुनर्न वयं वैयाकरणा इति । **उच्यते** । ईश्वरादिवदेकत्वे बहुत्वारोपात् ॥

## फल्गुनीप्रोष्ठपदानां च नक्षत्रे । ६० ।

**कथं** पूर्वफल्गुनी[3] । नक्षत्राद्वित्वैबहुत्वातिदेशात् । **उच्यते** । पूर्वोत्तरफल्गुन्यौ द्वे प्रोष्ठपदे च द्वे इत्यत्र सूत्रे बहुवचननिर्देशाद् बहुत्वं विवक्ष्यते; द्वयोरित्यनुवृत्तेर्द्वित्व[4] एव बहुत्वारोपात्[5] । इयमल्पिका[6] । आतिदेशिकं कार्यमनित्यमिति[7] वाच्यम् ॥

## पुमान् स्त्रिया । ६७ ।

**कथं** भवश्च भवानी च भवौ रुद्रावित्यादि[8], तल्लक्षणश्चेदेव विशेष इत्यनुवृत्तेः; अस्तीह हि पुंयोगकृतो भेदः; इन्द्रेन्द्राण्यावित्यत्र प्रत्युदाहृतम् । **उच्यते** ।

१. यत्नश्च 'ईयसो बहुव्रीहेर्नेति वाच्यम्' इत्येवंरूपः. अथ लौकिकोपसर्जनग्रहणेऽपि कथं दोषवारणं, यावता पिप्पलीशब्दोऽपि पूर्वपदार्थे गुणीभावाल्लौकिकमुपसर्जनं भवति यथा कौशाम्बीशब्दो निष्कौशाम्बौ. किञ्च यत्नोऽयं शास्त्रीयोपसर्जननिवृत्त्यर्थोऽपि कामं स्यात्, बहुव्रीहौ श्रेयसीत्यादेर्नियतविभक्तिकत्वेन शास्त्रीयोपसर्जनताया अपि भावात्. अवश्यं चेह शास्त्रीयोपसर्जनस्यैव ग्रहणं विज्ञेयम्, अन्यथा हरीतक्यः (फलानि) कुमारी (कुमारीवाचरन्) इत्यत्रापि ह्रस्वत्वप्रसङ्गः. अतो ह्रस्वमभ्युपगम्य समाधत्ते — **ह्रस्वे वे**त्यादि. २. **प्रत्युज्जीव्यत** इति परपदभूतपिप्पलीशब्दालिङ्गातिदेशेन हि पिप्पलीशब्दसम्बन्धि लिङ्गकार्यं गौरादिङीष्लक्षणं समासाद्भविष्यतीति सिद्धमीकारस्य प्रत्यानयनम्. ३. **कथं पूर्वे**त्यादि. द्वयोर्नक्षत्रयोः फल्गुनीप्रोष्ठपदाख्ययोर्द्व्यवयवज्योतिःसमुदायात्मनोरवयवानां स्वभावत उद्भूतत्वेन चतुष्ट्वात् सूत्रे **बहुवच**नमिति फल्गुनीप्रोष्ठपदाशब्दयोर्द्विवचनान्ततताया एव पक्षे प्रामाणिकत्वप्रतीतेरेकवचनप्रयोगोऽनुपपन्न इति शङ्काग्रन्थार्थः. ४. **द्वित्वे**ति. अन्यतरस्यांग्रहणानुवृत्त्या हि पक्षेऽभ्यनुज्ञायमानं द्वित्वं वस्तुतोऽवयवाश्रयमेवारोपितं समुदाय इति तदप्यतिदिष्टम्. ५. **पूर्वोत्तरे**त्यादि. अयमाशयः — द्व्यवयवसमुदायात्मनां पूर्वोत्तरत्वभेदेन भिन्नानां चतुर्णामेव नक्षत्राणां विवक्षणेन सूत्रे बहुवचनस्य निर्देशः. तेषु चैकैकस्मिन्नवयवभेदोद्भूतत्वं विवक्षामात्रायत्तं यदा विवक्षित्वा द्वित्वमारोपितं, तदैव पाक्षिकं बहुवचनं विधीयते न तु तदनुद्भूतत्वविवक्षायामेकवचनं न्यायप्राप्तं प्रत्याख्यायते इति. ६. **इयमि**ति युक्तिः समर्थना वा योग्यत्वात्. ७. का तर्ह्यनल्पलक्ष्यसंग्राहिका समर्थनेत्याकांक्षायामाह — **आतिदेशिकमि**त्यादि. ८. 'रुद्रादेश्चैकशेषोऽन्वेष्यः' इति च काव्यालङ्कारे वामनः.

'पुमान् स्त्रिया' (१-२-६७) इत्यत्र न्यासकृता 'पुमान्' इति योगविभागः कृतोऽस्य सिद्धये । [1]यद्यप्यानुक् पुंयोगमपेक्षते, तथापि [2]स्त्रियां विधानात् स्त्रीकृत एवायं भेदः । **कथं वा** दासीदासं कुटीकुटम् । **उच्यते** । 'गवाश्वादिषु पाठसामर्थ्यान्नैकशेषः' इति न्यासः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

**प्रथमाध्याये द्वितीयः पादः.**

---

## अथ तृतीयः पादः.

## भूवादयो धातवः । १ ।

**कथं** भवतीति, ऊकारस्येत्संज्ञाप्रसङ्गात् । **उच्यते** । निरनुनासिकत्वान्नेत्त्वं, 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' इति । प्रयोजनाभावाद्वा । न 'स्वरतिसूती' (७-२-४४) त्यादिना इड्विकल्पः प्रयोजनं, 'भूसत्तायां परस्मैभाष उदात्तः' इति उदात्तोपदेशानर्थक्यात् । [3]तन्नित्यमिडर्थं । न च गाप्रभृतीनामिवोदात्तत्वमनुदात्तनिवृत्त्यर्थं वाच्यं, निरच्कत्वादनुदात्तत्वाप्रसङ्गात् ॥

## हलन्त्यम् । ३ ।

**कथं** पुष्टिः, अनेन हि षकारस्येत्संज्ञया भाव्यम् । तथा च पुष्णातीत्यादि न सिध्यति । **उच्यते** । अनभिधानान्नैतत् । एवञ्च प्रयोजनाभावान्नेत्त्वम् । **कथमटतीत्यादि**, अनेन तु टकारलोपात् । प्रयोजनं तु टित्त्वात् ङीप्, यथा 'नासिकास्तनयोर्ध्माधेटोः' (३-२-२९) इत्यत्रोक्तम्—स्तनन्धयीति धेटष्टित्त्वात् ङीप् । **एवमादीनाम**कार इत्संज्ञापरित्राणार्थो, नोच्चारणार्थः । यथा 'इदमस्थमुः' (५-३-२४) इत्यत्रोकारः । **कथं** भवतीति, वकारस्येत्त्वप्रसङ्गात् । **उच्यते** । प्रयोजनाभावान्नेत्त्वम् । न च 'वान्तो यि प्रत्यये' (६-१-७९) इति विशेषणं प्रयोजनम्;

---

१. अन्यथा समाधत्ते — **यद्यपी**त्यादि. **अपेक्षत** इति. स्वसन्नियोगिङीष्द्वारेणेति शेषः. इन्द्रादिषट्कमातुलाचार्येषु ङीष् 'पुंयोगाद्' (४-१-४८) इति हि सिद्धः. २. **स्त्रियां विधानादि**त्यादि. यद्यानुक् पुंयोगे व्यधास्यत, तदा तत्कृतोऽयं विशेषोऽभविष्यदित्यर्थः. ३. **तदि**ति. उदात्तत्वम्.

अन्यथा[1] गव्यति नाव्यतीत्यत्र यान्तादेशोऽपि स्यात् । '**वान्तो यी**'त्यत्र 'अयान्तो यी'ति कर्तव्यं स्यात् ॥

## न विभक्तौ तुस्माः । ४ ।

**कथं** क, यजेयेति । 'किमोऽत्' (५-३-१२) 'इटोऽत्' (३-४-१०६) इत्यत्र स्थानिवद्भावादनेनेत्त्वनिषेधात् । **उच्यते** । 'अनित्यत्वादस्य[2] विधेः' इति वृत्तिः[3] । 'इटोऽदित्यत्रोक्तम्— नायमादेशावयवस्तकारः । किन्तर्हि मुखसुखार्थ उच्चार्यते[4]' । एवञ्च 'अनित्यत्वादस्य विधेः' इत्यत्रायमर्थो वेदितव्यः— 'किमोऽदि'त्यत्रेत्त्वनिषेधस्यानित्यत्वात्, 'इटोऽत्' इत्यत्रास्य विधेरकारस्य विधानाद् इति केचित्[5] ॥

## यथासङ्ख्यमनुदेशः समानाम् । १० ।

**कथं** भवतीति । अत्रायादेशः कस्मान्न भवति, यथासङ्ख्याभावात् । तद्धि दिशेरुच्चारणार्थत्वाच्छ्रुतानुमित[6]न्यायाच्च श्रुतयोरुद्देशानुदेशिनोर्युक्तं यथा 'तूदीसलातुर (४-३-९४) इत्यादौ । **उच्यते** । श्रुतन्यायफलस्या[7]न्तरङ्गस्यानित्यत्वाद्दिशेः प्रतिपादनवृत्तित्वाच्च सामान्येन[8] यथासङ्ख्यम् । 'परस्मैपदानाम्' (३-४-८२) इत्यादौ यथासङ्ख्यार्थं स्वरितत्व[9]सामर्थ्याद्वा । तथा च रक्षितः— 'स्वरितत्वसामर्थ्यात् क्वचिदर्थतः क्वचिच्छब्दात् सामान्यमाश्रीयते' इति । एवं च परस्मैपदादि-

---

१. **अन्यथे**त्यादि. असति वान्तग्रहणे पूर्वसूत्रानुवृत्तौ 'क्षय्यजय्यौ शक्यार्थे' (६-१-८१) इत्येकारस्यायादेशनिपातनारम्भेणातालव्यस्यैवैचः स्थानित्वपर्यालोचनादोकारौकारयोः स्थानेऽयवायावां चतुर्णामादेशानामविशेषेण विधानप्रसङ्गः. वान्तग्रहणेन पुनरयायोर्व्यावर्तनाददोष इति भावः. प्रयोजनं प्रत्याचष्टे—**वान्तो यीत्यत्रे**त्यादि. 'अयान्तो यि प्रत्यये' इति करणेऽकारस्याधिक्यं तु न शङ्क्यं, संहितया पाठे पूर्वरूपात्. २. अनित्यत्वञ्च प्रतिषेधविधेः 'इदमस्थमुः' इत्युकारेण ज्ञाप्यते; नित्यत्वे ह्यनेनैव मकारो विभक्तिस्थः इत्संज्ञासकाशात् त्रातुं शक्य इति किमुकारेण. ३. **वृत्तिरि**ति. काशिकायां हि 'किमोऽत् इटोऽत् इत्यत्र प्रतिषेधो न भवति' इत्युक्त्वोक्तमिदम्. ४. तथा च केवल एवाकारो विधीयते, न तु किमोऽदित्यत्रेव तकारानुबन्धवानिति तित्स्वराभाव इति वृत्त्याशयः. ५. **केचिदि**ति. अस्वरससूचनम् इटोऽदित्येतद्विषये 'इत्त्वं न' इत्यश्रुतसाध्यकल्पने क्लेशात्. ६. न्यायश्च 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति. ७. श्रुतन्यायस्य प्रतियोग्यभावादाह—**श्रुतन्यायफलस्ये**ति. फलं तु श्रुतसम्बन्धोऽश्रुतसम्बन्धेनानुमानद्वारकेण सप्रतियोगीति भवति ततोऽन्तरङ्गः. ८. समत्वेनेत्यर्थः. ९. यथासङ्ख्यसूत्रेऽपि स्वरितेनेत्यस्य सम्बन्धं मन्यते.

संज्ञानुमितस्य तिप्तसादेर्यथासङ्ख्यं णलादिः।[1] एकत्वाद्यभिधानादान्तरतम्याच्च 'लुट' (२-४-८५) इत्यत्र डादिः। संज्ञानुमितयोः क्तक्तवत्वोः 'ङसिङसोश्च' (६-१-११०) इत्यत्रैङ एकारौकारयोश्चास्वरितत्वान्न यथासङ्ख्यम्। अथवा आन्तरतम्या-द्यादयो भविष्यन्ति। तथा हि—एकारादीनां सन्ध्यक्षरत्वादकारेकारात्मक एकारः, अकारोकारात्मक ओकारः, अकारैकारात्मक ऐकारः, अकारौकारात्मक औकारः। एवं च सं[3]वृताकारवत एकारस्य ओकारस्य चायवौ विवृताकारवत ऐकारस्य औका-रस्य चायावौ भविष्यतः। [4]तदुक्तं—'संवृताकारस्य संवृताकारो विवृतावर्णस्य विवृ-तावर्ण' इति। ननु कथमेतद्, यतो वर्णेषु ये वर्णैकदेशास्तेषु तत्कार्यं न भवती-त्युच्यते। सन्ध्यक्षरवर्जं हि तत्; सन्ध्यक्षरेषु [5]प्रयत्नभेद एव। तथा 'ऐऔजि'-त्यत्र भर्तृहरिः—'सन्ध्यक्षरेषु वि[6]रामोपादानाभ्यां (लक्ष्यः प्रयत्नो वा?) लक्ष्यौ प्रयत्नौ द्वौ' इति। [7]अत एव 'ए ऐ कण्ठतालव्यौ' 'ओ औ कण्ठोष्ठ्यौ' इति काल-विच्छेदाभावेऽपि [8]पृथक्प्रयत्नत्वात् 'हे गौः' इत्यत्र न सम्बुद्धिलोपः॥

## अनुदात्तङित आत्मनेपदम्। १२।

**कथम्**—

'कर्णपुच्छं मया त्यक्तं भग्नो दन्तस्तथैव च।

---

१. एवमपि प्रथमपुरुषसंज्ञिनः षड्, डादयस्तु त्रय इति वैषम्यात् 'लुटः प्रथमस्य' इत्यत्र सङ्ख्यातानुदेशो न प्राप्नोतीत्याशयेनाह — **एकत्वादी**ति. सङ्ख्यातानुदेशाभावेऽप्येकार्थयोस्ति-पयोरेकार्थौ डा, द्व्यर्थयोस्तसातामोर्द्व्यर्थौ रौशब्दः, त्र्यर्थयोर्झिझयोस्त्र्यर्थौ रसित्येवमर्थकृतान्तर्यात् प्रयोगदर्शनेन शक्यावसायाद्व्यवस्था भविष्यतीत्यर्थः. एतच्च डारौरसश्च डारौरसश्च डारौरस इत्ये-कशेषानाश्रयणे द्रष्टव्यम्. २. रदाभ्याम् (८-२-४२) इत्यत्रेति शेषः. ३. संवृतत्वञ्च प्रायो-गिकं बोद्धव्यम्. ४. प्रकृतभाष्य इति शेषः. ५. **प्रयत्नभेद एवे**ति. उपलभ्यत इति शेषः. तथा च तन्निष्पाद्यौ सन्ध्यक्षरभागौ वर्णग्रहणेन सुग्रहाविति न्याय्यं तयोर्वर्णकार्यमिति भावः. ६. पूर्वभागविषयस्य प्रयत्नस्य विरामादुत्तरभागविषस्यारम्भाच्चेत्यर्थः. ७. **अत एव** अवयवप्रयत्नभेदादेव. ८. **पृथक्प्रयत्नत्वादि**ति. अवयविन ओकारस्यांशतः संवृतत्वादौका-रस्य तु सर्वथा विवृतत्वादिति भावः. अथैवं विभाव्यते—अकारस्य संवृतत्वं नाम प्रयोगभावि. तद्गा-ढमान्तरतम्ये व्यवस्थापकमस्तु. सवर्णसंज्ञायां तु प्राक्रियिकस्य विवृतत्वस्यैव तादर्थ्याद्व्यवस्थापकत्वं युक्तम्. अत एव 'अग्ने एति' इत्यादौ एकारावयवस्याकारस्य तुल्यप्रयत्नतया सावर्ण्यात् अग्रह-णेन ग्रहणाद् 'एङः पदान्तात्' (६-१-१०९) इति पूर्वरूपं स्यादिति तत्परिहाराय '(सन्ध्यक्षरेषु) यदत्रावर्णं, विवृततरं तदन्यस्मादवर्णात्' इत्यभ्युपगतम् ऐऔच्सूत्रे भाष्ये; अन्यथा हि 'यदत्रा-वर्णं, तत् संवृतम्' इति प्रयत्नभेद एवावक्ष्यत. इति, 'तदा स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्। ताभ्यामेओ विवृततरौ ताभ्यामैऔ विवृततमौ॥' इति शिक्षानुसारेण प्रयत्नभेदमा-श्रित्य एदैतोरोदौतोश्च मिथः सावर्ण्यं कामं वार्यताम्.

एष कालः समुत्पन्नो यः पलाति स जीवति ।'

इति । पलायत इति स्यात् । उच्यते । 'पल गतौ' इत्यस्य लेटि आडागमे रूपम् । छान्दसा अपि भाषायां क्वचित् प्रयुज्यन्ते । अध्वर्युशब्देन[1] क्याच्छन्दसि (३-२-१७०) इत्युप्रत्ययान्तेन ज्ञापितम्[2] । अथवा 'अय गतौ' इत्यस्मादात्मनेपदानित्यत्वात् तिपि दिवादौ 'ध्या चिन्तायामि'ति कर्त्तव्ये भूवादौ 'ध्यै चिन्तायामि'ति ज्ञापकात् गणकार्यानित्यत्वाच्छपोऽभावे रूपं 'लोपो व्योर्वलि' (६-१-६६) इति यलोपे पलातीति । कथमुच्चुकुटिषतीति । कुटादित्वेन सनो ङित्त्वात् तङ्प्रसङ्गात् । उच्यते । उपदेशाधिकारादिति गाङ्कुटादौ न्यासः । कथं तर्हि बोभूयते "'तपसः परस्मैपदं च' इति ज्ञापकात् सनाद्यन्तानामप्युपदेशोऽस्ति" इति ज्ञापकसमुच्चयः । स चायुक्तः 'भावकर्मणोः' (१-३-१३) इत्यात्मनेपदनिवृत्त्यर्थत्वात् । ततश्च 'पुच्छभाण्डचीवराण्णिङ्' (३-१-२०) इति ज्ञापकम् । कथं 'शिञ्जद्वलयसुभगैः' इति मेघः । उच्यते । चक्षिङो युजर्थमात्मनेपदार्थं[3] चेकारानुबन्धे[4] कर्त्तव्ये द्व्यनुबन्धत्वं ज्ञापयति अनुदात्तङित[5] आत्मनेपदमनित्यामिति । एवं च—

'काशे स्यन्द कुशे स्यन्द स्यन्द त्वं शत्रुमस्तके ।
अस्माकं तु तथा स्यन्द यथा स्यन्दसि (षेणव?) ॥'

तथा—'नीचं समृद्धमपि सेवति नीच एव दूरेण तं परिहरन्ति पुनर्महान्तः' 'अनुक्तमप्यूहति पण्डितो जनः' 'लभन्ति पुनरुत्थानम्' 'तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न' 'त्राहि मामुरुदुःखितम्' । 'त्राहि मां हि तथागतम्' । त्राहीत्यत्रेदमपि वाच्यम् । त्रायत इति त्राः । 'अन्येभ्योऽपि दृश्यत' (३-२-७५) इति विचि आचारे क्विपि धातुत्वे लोटि रूपम् । मां त्राहि त्रातेवाचरेत्यर्थः । तथा[6] 'मण्डपे शयामि किमतः पर'मिति; 'गणकार्यमनित्यम्' इति 'गणकार्यानित्यत्वाच्छपोऽलुग्' भवेत् । 'आदध्यादन्धकारे रतिमतिशयिनीमावहन्वीक्षणानाम्' इति मयूरः । उच्यते—धा

---

१. 'अध्वर्युक्रतुः' (२-४-४) इति सूत्रे, 'अध्वर्युशाखा' इति भाष्ये च प्रयुक्तेनेति शेषः. २. तेन 'मदनपारेपन्थिप्रणयिनी'त्यादयः प्रयोगाः. ३. युजर्थमिति. न च ल्युनैव विचक्षणासिद्धिः, तस्मिन् मध्योदात्तत्वं, युचि त्वन्तोदात्तत्वमिति व्यतिरेकात्. ४. इकारानुबन्धे इति. अनुदात्ते इति शेषः. ५. अनुदात्तेत्यादि. अनुदात्तेत्त्वलक्षणं ङित्त्वलक्षणं चात्मनेपदमनित्यमित्यर्थः. ६. यथा त्राहीति प्रयोगो ङिल्लक्षणस्यानित्यत्वे न फलमन्यथासिद्धत्वाद्, एवं शयामीति प्रयोगोऽपि न फलमनेकसंस्कारविकलतयापशब्दत्वादित्यभिप्रायं मनसिकृत्य तामेवानेकसंस्कारविकलतां समर्थनच्छलाद् दर्शयति — तथेत्यादि.

धारण इत्यस्य धातोर्नायं[1] प्रयोगः; किन्तु 'दध धारणे' इत्यस्याशिष्यार्धधातुकत्वे[2] । आदधातीत्यादधः[3] । ततश्चाचारक्विबन्तादाशिषि लिङ्यकारलोपे यासुटि रूपम् । तथा 'सर्वमापोमयञ्जगद्' इति चन्द्रिकायां 'सर्वं जगदापोऽमयन्निति विलोक्य[4]' इति व्याचक्षाणा 'अय वय पय मय तय णय गतौ' इत्यस्माल्लङि रूपमाहुः । अत्र नकारस्य श्चुत्वेन ञकारः । अन्ये त्वप्छब्दं सकारान्तमाहुः यस्यायं वैदिकप्रयोगः – 'आपोभिर्माजनं कृत्वा' इति । तथा च कोशः – ('कमलं सलिलं भुवनमुदकं धावकनीरकबन्धं । धवनवारिजीवनाः सुजले ब्रुवते कतमेऽपि नपुंसकमापः? )' इति । व्याख्यानान्तरं बहुत्वान्नोक्तम् । तथा — 'प्रत्यूषकाले जगदङ्गनानां मुखेषु कामः प्रतिजृम्भति' इति । 'माता शत्रुः पिता वैरी येन बाल्ये न पाठितः । न शोभति सभामध्ये हंसमध्ये बको यथा ॥' 'अरिं मित्रमुदासीनं मध्यस्थं स्थविरं गुरुम् । यो न बुध्यति मूढात्मा सर्वथासौ विनश्यति ॥' इति । तथा 'परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनम्' इत्यादि । 'स सहेन्न कथं(नं?) तुषारम्' इत्याधृषीयस्य सहेः[5] । तथा — 'ग्रसति तव मुखेन्दुं चन्द्रबिम्बं विहाय ।' 'पिण्डं ग्रसतीति पिण्डग्रः' इति 'अत्वसन्तस्य' (६-४-१४) इत्यत्र वृत्तौ । 'ग्रसु ग्रहणे[6]' इत्याधृषीयस्य[7] रूपमिति रक्षितः ॥

## कर्त्तरि कर्मव्यतीहारे । १४ ।

**कथं** 'सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्' इति रघुः । **उच्यते** । 'प्रतिषेधे[8] हसादीनामुपसंख्यानम्' इति रक्षितः । अत्रादिशब्दः प्रकारे सादृश्ये (च?) । तच्चप्राप्तात्मनेपदाभावत्वेन न तु शब्दक्रियत्वेन । एवं च यदुक्तं भागवृत्तिकृता – 'प्रकारस्तु शब्दक्रियत्वाद्' इति, तन्न । विनिमयशब्देन कर्मव्यतीहारस्योक्तत्वादिति तु न वाच्यम्, 'इतरेतरान्योन्योपपदाच्च' इति वचनात्[9] । अपशब्द एवायमित्यनुन्यासः । '"ततः सम्प्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ' इति कर्मव्यतीहारो न विवक्षितः, किं तर्हि युध्यमानाविति" इति कैयटः ॥

---

१. **नायमि**ति. अपेक्षिताया आशिषः सार्वधातुकलिङानवगमादिति भावः. २. **अस्ये**ति. आत्मनेपदं तु नानित्यत्यत्वात्. ३. **आदधाती**त्याङः सामासिकसम्बन्धमात्राभिप्रायं, 'ददातिदधात्योर्विभाषा' (३-१-१३९) इत्यनुपसर्गादेव शविधानात्. ४. विलोक्येति पदं श्लोकस्थम्. ५. सहिश्चुरादौ मृग्यः. ६. आत्मनेपदपाठ एव तु पदमञ्जर्योपलब्ध इति प्रतिभाति. ७. ग्रसिराधृषीयेषु मृग्यः. ८. 'न गतिहिंसार्थेभ्यः' (१-३-१५) इति प्रतिषेधे. ९. ततश्च इतरेतरान्योन्यपरस्परातिरिक्तशब्देन कर्मव्यतीहारस्योक्तत्वेऽपि विधिप्रवृत्तेरावश्यकत्वादित्यर्थः.

## नेर्विशः । १७ ।

**कथं** 'अङ्के निविशती भयाद्' इति रघुः । नेरुपसर्गस्य ग्रहणमम्बूनि विशन्तीति व्यावृत्त्यर्थम् । इह तु उपसर्गप्रतिरूपको निपातः । [1]पदसंस्काराश्रयणाद्वा ॥

## आङो दोऽनास्यविहरणे । २० ।

**कथं** 'किं वा दत्से विहग! पतनम्' । **उच्यते** । [2]कर्त्रभिप्राये भविष्यति । एवञ्च 'प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्' इति [3]भारविः । 'युजेरयज्ञपात्रेषु (१-३-६४) इति स्वराद्यन्तोपसृष्टादिति वक्तव्यम्' इत्युभयानियमात् केवलात् तङोऽभावात् ॥

## क्रीडोऽनुसम्परिभ्यश्च । २१ ।

**कथं** 'सलक्ष्या यष्टिभागस्वनवनसहितः क्रीडते नागराजः' इति शुद्धसुबन्ते । **उच्यते** । अपशब्द एवायम् । क्रीडित इति पाठो वा । [4]वार्त्तिकसमुच्चयार्थचकाराद्वा ॥

## शप उपालम्भन इति वक्तव्यम् ।

**कथं** 'सख्यः शपामि यदि किञ्चिदपि स्मरामि' । **उच्यते** । चकारसंगृहीतस्यास्य 'नपुंसकमनपुंसकेन' (१-२-६९) इत्यतोऽन्यतरस्यांग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वेनानित्यत्वाद्वा । [5]वाचा शरीरस्य स्पर्शनायोगाद्वा । भागवृत्तौ (तूपलम्भनप्रकारमुक्तम्?) तूपालम्भनं प्रकाशनमुक्तम् । [6]एवञ्च पूर्वक एव सिद्धान्तः ॥

## आशिषि नाथः ।

**कथं** 'नाथसे किमु पतिं न भूभृताम्' इति भारविः । **उच्यते** । 'आशि-

---

१. उपसर्गग्रहणमर्थवद्ग्रहणन्यायलभ्यं, न तु वाचनिकमित्यरुचेराह — **पदसंस्काराश्रयणाद्वे**ति. यदि निपातोऽप्यनर्थकः, तदा पूर्वकमपि समाधानं साधु. २. **कर्त्रि**ति. 'स्वरितञितः (१-३-७२) इत्यनेनेति शेषः. प्रकृतसूत्रं ह्युपसृष्टादकर्त्रभिप्रायेऽपि विध्यर्थम्. ३. **भारवि**रिति. उपपद्यत इति शेषः. ४. **वार्तिके**ति. चकारः 'समोऽकूजने' इत्याद्यनुक्तं समुच्चिन्वन्ननुपसृष्टमपि समुच्चेष्यति. आङ् च कथञ्चित् स्वरितत्वादनुवर्तिष्यते इति भावः. ५. **वाचे**त्यादि. 'वाचा शरीरस्पर्शनमुपालम्भनम्' इति हि काशिका. ६. **एवञ्चे**ति. उपलम्भन इति पाठस्यैव प्रामाणिकतया प्रकाशनस्य तदर्थत्वात् सखीः प्रति स्मरणाभावप्रकाशनस्येह स्फुटत्वात् तङ्गे दुर्वारत्वे सतीत्यर्थः.

प्येव नाथ इति नियमार्थं नेदं; किं तर्हि, अनुदात्तेत्त्वलक्षणात्मनेपदानित्यत्वान्नित्यात्मनेपदार्थम् । तेनाशीर्विषयादन्यत्र विकल्पं ज्ञापयति' इति कश्चित्[1] । नाधस इति वा पाठः कर्त्तव्यः । एवं 'नाथ! त्वामनुनाथे विजहिहि संरम्भम्' इत्यपि । अथ वा सङ्गरसंरम्भं त्यजेति त्वामाशंस इत्यर्थः ॥

## हरतेर्गतिताच्छील्य इति वक्तव्यम् ।

**कथं** 'जलधिमनुहरते सरः' । **उच्यते** । 'गतताच्छील्ये' इति तु भागवृत्तिः । 'गतविधप्रकारास्तुल्यार्थाः' इति भर्तृहरिः । तेन सादृश्यशीलने तङ् । वृत्तिकारमतेन[2] तु कर्त्रभिप्राये भविष्यति ॥

## उदोऽनूर्ध्वकर्मणि । २४ ।

**कथम्** 'उत्तिष्ठते वासुकिनापि दष्टः' इति प्राणेश्वरः । **उच्यते** । नात्रोर्ध्वगमनं, किन्तर्हि, बोधनमर्थः ॥

## आङो यमहनः । २८ ।

**कथम्** 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः, अकर्मकादित्यनुवृत्तेः । **उच्यते** । वक्षसेत्यध्याहार्यम् । अयमर्थः — विषमविलोचनस्य वक्षसा स्वं वक्ष आजघ्ने । बाणनद्याः प्रतिमुखं यथा स्यात् तथा भुजाभ्यामुपेत्य । अथवा विषमविलोचनस्य भुजाभ्यां स्वं वक्ष आजघ्ने । अथवा विषमविलोचनस्येति सामीप्ये षष्ठी । स्वं वक्ष आजघ्ने आस्फोटितवान् । यद्वा प्रतिमुखमिति विभक्त्यर्थेऽव्ययीभावः । विषमविलोचनस्य वक्ष एत्य आजघ्ने । प्रकृतत्वाद्वक्ष एव । एवं चाङो यमहन इति तङ् । पूर्वव्याख्यायामकर्मकाचेत्यनेनात्मनेपदमिति भागवृत्तिः ॥

## समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः । २९ ।

**कथं** 'तच्चैक्यं समगच्छते'ति तङ् अकर्मकादित्यनुवृत्तेः । **उच्यते** । ऐक्यमिति चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । ततश्च एकं समगच्छत समपद्यतेत्यर्थः । 'आगमत्वात्[3] तिङ्व्यत्ययः । नेयं स्मृतिर्[4]भगवद्व्यासप्रभृतीनधिकृत्य कृता । ते हि

---

१. **कश्चिदि**ति. नामानिर्देशकवचनाभ्यामत्यन्तानुपादेयतामुक्तार्थस्य द्योतयति, यतोऽनित्यत्वं नाम विधेरनिष्टे विषये प्रवृत्त्यनुन्मुखत्वं, न पुनरिष्टेऽपीति 'सर्पिषो नाथते' इत्यादावात्मनेपदाप्रवृत्तिशङ्काया एव नावकाशः. २. **वृत्तिकारे**ति. यथा तु हरदत्तो व्याचष्टे — 'गतिः प्रकारः' इति, तथा गतपाठसमानफलो गतिपाठ इति न भागवृत्तिमताद् वृत्तिकारमतं भिद्यते. ३. **आगमत्वादि**ति आर्षत्वादित्यर्थः. ४. **स्मृतिरि**ति. व्याकरणरूपा.

भगवन्तो वाग्विषये स्वतन्त्राः' इत्यनुन्यासः। कथं 'न सम्पपृच्छे गमनाय सत्वरा सखीजनं सन्ददृशे तथापरा' इति घोषः, तथा 'रक्षांसीति पुरापि संशृणुमहे' इति मुरारिः, अकर्मकादित्यनुवृत्तेः। उच्यते। कर्मव्यतीहारे तङत्र। (अन्योन्यप्रश्नसन्दर्शनं संश्रवणपूर्वकमुच्यते?) 'सखीजनादि'ति वा पाठः, ल्यब्लोपे पञ्चमी, सखीजनं प्राप्येत्यर्थः॥

## सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः। ३६।

कथं 'विनिन्युरेनं गुरवो गुरुप्रियम्' इति रघुः। उच्यते। आचार्यकरणस्याविवक्षितत्वात्। 'तदाद्याचिख्यासायाम्' (२-४-२१) इति च सना ज्ञापितं—विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणं, न वस्तुतः सत्ता॥

## कर्तृस्थे चाशरीरे कर्मणि। ३७।

कथं 'विगणय्य नयन्ति पौरुषं विजितक्रोधतया मनीषिणः' इति भारविः। वेरित्यनुवर्तते। तेन न तङिति रक्षितः। (एवं च क्षपनयमनीनमानम्?)॥

## आङ उद्गमने। ४०।

उद्गमने प्रधाने गुणभूते च तङ्, ज्योतिरुद्गमनस्य 'आक्रामति धूमो हर्म्यतलम्' इति भाष्ये प्रत्युदाहरणात्। अत्र ह्युद्गमनपूर्विकायां व्याप्तौ क्रमिः। उद्गमनमात्रे 'आक्रमत आदित्यः'। उद्गमनपूर्विकायां व्याप्तौ 'दिवमाक्रममाणेव केतुतारा भयप्रदे'ति माघिः। यद्येवं कथं 'नभः समाक्रामति मष्टवर्त्मना स्थित्यैकचक्रेण रथेन भास्करः' इति। उच्यते। अपशब्द एवायमिति भागवृत्तिः। श्रीसर्वरक्षितस्त्वाह—"व्याप्तिमात्रवचनोऽत्र क्रमिः। उद्गमस्तु गम्यमानोऽपि न विवक्षितः। विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणं न वस्तुतस्सत्ता। तदाद्याचिख्यासायामित्यत्र सन्प्रयोगेण ज्ञापितम्"॥

---

१. मुरारिप्रयोगे इति कथयन्त्यः इत्यध्याहारमाहुरपरे. २. 'अन्योन्यप्रश्नदर्शनश्रवणानि सम्पूर्वकैरुच्यन्ते' इति पाठः स्यात्. ३. ज्ञापितमिति. 'तदाख्याने' इति वा, 'तदादौ' इति वा करणेऽपि तदादित्वाभावे कार्यं न भविष्यतीत्यतिरिच्यमानम् आचिख्यासाग्रहणं यत्र तदादित्वं वस्तुतोऽस्ति न च प्रयोक्ताख्यातुमिष्यते, तत्र मा भूदित्येतदर्थम्. तेन वस्तुतोऽप्यर्थस्य विवक्षायां सत्यां कार्यप्रवृत्तिर्नाविवक्षायामिति सामान्यतोऽनुमीयते इत्यर्थः. ४. 'वेः शब्दकर्मणः' (१-३-३४) इत्यत इति शेषः.

## प्रोपाभ्यां समर्थाभ्याम् । ४२ ।

कथं 'ते तां हन्तुं प्रचक्रमु'रिति चण्डी । उच्यते । 'पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण' ॥

## अनुपसर्गाद्वा । ४३ ।

कथं 'वारिपूर्णां महीं कृत्वा पश्चात् सङ्क्रमते गुरुः' । तथा 'अर्धरात्रे कलाहीने यदा सङ्क्रमते रविः' । उच्यते । उपसर्गप्रतिरूपकत्वाद् 'अनुपसर्गाद्वा' इति तङ् । यच्च 'क्रीडोऽनुसम्परिभ्यश्च' (१-३-२१) इत्यत्रोक्तं — 'समा साहचर्यादन्वादय उपसर्गा गृह्यन्ते'[1] इति, तत् कर्मप्रवचनीयव्यावृत्तिपरं समोऽकर्मप्रवचनीयत्वात् । उपसर्गप्रतिरूपकस्तु परिणा साहचर्यात् । 'अकर्मकाच्च' (१-३-३९) इति चकारानुवृत्तेर(प्रत्या)प्रादावुपसर्गान्तरे तङ् । (सङ्क्रमत इति वा पाठे सिद्धासिद्धौ गुरुरित्यर्थः?) ॥

## अकर्मकाच्च । ४५ ।

कथं 'सम्भविष्याव एकस्यामभिजानासि मातरि' इति भट्टिः, 'अभिजानासि देवदत्त! कश्मीरेषु वत्स्यावः' इति जानातेरकर्मकत्वादनेन तङ्प्रसङ्गात् । उच्यते । 'व्यवस्थितविभाषाविज्ञानात्, ज्ञानोपसर्जनवृत्त्या जानातेर्[2]ज्ञानार्थत्वात्, तस्य भाष्यकारवचनाद्वा 'अभिजानामीति' इत्युक्तवान् [3]भागवृत्तिः । 'वाक्यार्थस्य कर्मणो विवक्षितत्वाद्' इति रक्षितः । एवं[4] च 'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽपि दृष्टा मया' इत्यत्र तङ् न स्यात् । 'अनुपसर्गाद् ज्ञः' (१-३-७६) इति कर्त्रभिप्राये तङ् ॥

## उपाद्यमः स्वकरणे । ५६ ।

कथम् 'उपायंस्त महास्त्राणि' तथा 'उपायंसत नासवं' 'शस्त्राण्युपायंसत जित्वराणि' 'नोपायध्वं भयं सीताम्' इति भट्टिः । स्वकरणं पाणिग्रहणमिति व्याख्यानात् । उच्यते । 'क(र्तरी?)र्तृस्थ इत्यनुवृत्तेः स्वकरणमात्यन्तिकस्वीकारः' इति रक्षित(:?) भागवृ(त्तिः?)त्ती । 'उपाङ्पूर्वोऽत्र यमिरि'ति जयमङ्गला । ततश्च 'समुदाङ्भ्यो यमोऽग्रन्थे' (१-३-७५) इति तङित्यन्यः ॥

---

१. 'अन्वादिरुपसर्गो गृह्यते' इति पाठो दृश्यते काशिकायाम्. २. स हि ज्ञानार्थः, ज्ञानं यः प्राधान्येनाभिधत्ते. ३. लक्षणया भागवृत्तिकार इत्यर्थः. ४. एवश्चेति. वाक्यार्थकर्मतायां च.

## म्रियतेर्लुङ्लिङोश्च । ६१ ।

**कथं** 'मग्ने पतङ्गवद्वीरै'रिति भट्टिः । उच्यते । 'क(र्तरी?)र्तृस्थ इत्यनुवृत्तेः कर्तरीति नियमाद्भावे तङि'ति रक्षितः ॥

## प्रोपाभ्यां युजेरयज्ञपात्रेषु । ६४ ।

**कथं** 'प्रजासु वृत्तिं यमयुङ्क्त वेदितु'मिति भारविः । उपसर्गयोगाभावात् । उच्यते । कर्त्रभिप्राये ॥

## भुजोऽनवने । ६६ ।

**कथं** 'दिवं मरुत्वानिव भोक्ष्यते महीम्' । तथा 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' इति रघुः । तथा 'बुभुजाते चिरं महीम्' इति कामन्दकीयः । पालने 'अनवने' इति प्रतिषेधात् । उच्यते । '"भुजो भक्षे' इति कर्तव्ये अनवग्रहणादुपभोगवृत्तावपि तङ्" इति रक्षितः । पुरुषोत्तमदेवश्च — 'उपभोगोऽत्र गौणार्थः । आत्मसात्करणं वा अनवनम्' । एवं च 'वृद्धो जनो दुःखशतानि भुङ्क्त' इत्यपि । चान्द्रास्तु भुजो भक्ष इत्येवमाहुः । तेषां चिन्त्यम् ॥

## अनुपसर्गाज्ज्ञः । ७६ ।

**कथम्** 'इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य' इति भट्टिः । उच्यते । नृपेणेति विपरिणामेन कर्मण्यात्मनेपदमिति जयमङ्गला ॥

## शेषात् कर्तरि परस्मैपदम् । ७८ ।

**कथम्** 'इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे' इति भवभूतिः । शासेः परस्मैपदित्वात् । उच्यते । 'आङः शासु इच्छायामि'त्यस्य शास आङः प्रयोगः प्रायेणेति लक्ष्यते । **कथं** 'स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते' । उच्यते । कर्मकर्तरि तङ् । **कथं** 'दासत्वं गच्छते नार्या वृद्धस्तु पुरुषोत्तमः' । तथा 'नाकानं कारिणां सखे' । इति रघुः कर्मव्यतीहारे 'न गतिर्हिंसार्थेभ्यः' (१-३-१९)

---

१. 'आङो दः' (१-३-२०) इत्यत्र तु प्रसङ्गादेतदुक्तम्. २. **गौणार्थ** इति. स च पदेन तङन्तेन प्रतीयते, यथा गौरिति सुबन्तेन वाहीकः. तङ् त्वदने मुख्यार्थे पूर्वमेव जात इति भावः. उपपत्तिवैचित्र्यमात्रमेतत्; भुजेरेव ह्युपभोगो मुख्यार्थो भवति उपसर्गस्य द्योतकत्वात्. **आत्मसात्करणमिति.** रक्षणीयं निक्षेपादिकमात्मसात्कुर्वन् हि तस्यारक्षक उच्यते.
१. महीशब्दस्य महीजन्यभोज्यलक्षणयाप्युपपद्यते पूर्वः प्रयोगः, न त्वयमिति विशेषः.

इति निषेधात् । उच्यते । गात्रैरिति पाठः कर्तव्यः । कर्मकर्तरि चायं तङिति टीका । गच्छत इति चिन्त्यमिदम् । कथं 'मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति' इति; कर्मणि तङि पापैरिति स्यात् । उच्यते । कर्मवद्भावे कर्तरि यगात्मनेपदम् । अन्तर्भावितण्यर्थो वा मुचिः । पापेभ्यो मुच्यते त्याज्यत इत्यर्थः । कथं 'रजसा शुद्ध्यते नारी' इति तङ् । उच्यते । शुद्धशब्दात् 'तत्करोति' इति णिच्; कर्मणि तङ् । कथं 'कदाचित् कुप्यते माता नोदरस्था हरीतकी' इति । उच्यते । कर्तरि क्विबन्तात् क्यङ् । कथं 'प्रियामुखं किम्पुरुषश्चुचुम्बे' इति कुमारः । उच्यते । कर्मव्यतीहारे । 'अन्योन्यचुम्बनमिति कर्मव्यतीहारः' इत्यनुन्यासः । कथम् 'अन्वेषमाणं मुहुः' इति कादम्बरी । तथा 'प्रेषे तत्क्षणमास्यानाम्' इति चाणक्यः । तथा अध्येषामहे[1] इति विध्यादिसूत्रे वृत्तिः । उच्यते । एतच्च ईष गतावित्यस्य[2] रूपम् । कथं 'नन्दते च कुलं पुंसां', तथा 'ततः स ददृशे च तौ' (मधुकैटभौ), तथा 'तच्छृणुष्व मयाख्यातं यथावत् कथयामि ते' उच्यते । आगमत्वादित्युक्तमेव । कर्मकर्तरि[3] वा रूपाणि । कथं 'स्वराज्यं प्राप्स्यते भवान्' इति । उच्यते । आगमत्वादिति । कथं 'वलमानो(वेलितो[4]?) नीलः' 'ज्वलमानोऽनलः'[5] । ताच्छील्ये चानश् । कथं 'प्रसज्यते भूः' 'षञ्ज[6] गतौ' इत्यस्य परस्मैपदित्वात् । उच्यते । 'प्रसज्यत इति भाष्यकारवचनाद्' इति धातुप्रदीपः ॥

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । ८६ ।

कथं 'पातालहंसाः पटुभिर्निनादैः प्रबोधयन्ते नृप! नागकन्याः' इति, अनेन परस्मैपदित्वात् । 'णेरणौ' (१-३-६७) इत्यादिना तङ् । अयमर्थः—नागकन्यका हंसान् प्रबोधयन्ति हंसास्ताः प्रबोधयन्ते । एवं 'करेणुरारोहयते निषादिन'मिति माघः । 'स सन्ततं दर्शयते गतस्मयः' इति भारविः ॥

## निगरणचलनार्थेभ्यश्च । ८७ ।

---

१. अध्येषामहे इति. हरदत्तस्तु 'अध्येष्यामहे' इत्येव पाठमुपलभ्य दूषयन् 'अधीच्छामः' इति पाठं स्थापितवान्. २. 'ईष गतिहिंसादर्शनेषु' इति भ्वादिपठितस्यात्मनेपदिन इत्यर्थः. ३. कर्मकर्तरीति. एवमपि यगभावाय 'आतिदेशिकं कार्यमनित्यम्' इत्याश्रयणीयमिति नायं हृद्यः परिहारः. ४. लोलमान इति पाठः स्यात्. ५. 'लोलमानदयश्चानशि' इति काव्यालङ्कारे वामनः. ६. 'षञ्ज सङ्गे' इति धातुपाठे दृश्यते.

